॥ श्रीः ॥

# बलिविजयनाटकम्

श्री यदुशैलवासि बालधन्वि
जग्गूवकुलभूषणकवि
विरचितम्

मैसूरु
राजकीय शाखामुद्रालये सम्मुद्रितम्
१९४९

॥ श्रीः ॥

॥ शुभमस्तु ॥

॥ श्रीमते हयग्रीवाय नमः ॥

# बलिविजयनाटकम्

---

## प्रथमोऽङ्कः

(नान्द्यन्ते ततः प्रविशति सूत्रधारः)

सूत्रधारः—अजोऽपि देहीत्यवदच्छ्रिताश्रयो
यो वामनो दानवमानसूदनः ।
अनन्तकल्याणगुणाकरो हरिः
स पातु वस्सान्द्रपयोदमेचकः ॥ १ ॥

(परिक्रम्य) एवमार्यमिश्रान्विज्ञापयामि—

नानानाटकनिर्माता यः कोविदमुदावहः ।
स एवास्यापि कर्ता हि जग्गूवकुलभूषणः ॥ २ ॥

अये ! किमिदं मयि विज्ञापनैकताने शब्द इव श्रूयते । पश्यामि तावत् ।

(नेपथ्ये)

किं वा स्थिरं जगति हन्त शरीरभाजां
वाताहताभ्रसदृशं किल वस्तुजातम् ।
एतादृशे सुखधियैव दुरन्तभोग्ये
द्रव्ये जनाः कृतधियोऽनुभवन्ति दुःखम् ॥ ३ ॥

अत्र साक्षी प्रक्षीणलक्ष्मीकस्सहस्राक्ष एव ।

सूत्रधारः—भवतु विज्ञातम्—

बलिना दानवेनाजौ हृतत्रैलोक्यसम्पदम् ।
समाश्वासयितुं शक्रं वनं विशति वामनः ॥ ४ ॥

(इति निष्क्रान्तः)

स्थापना

---

(ततः प्रविशति वामनः)

वामनः—(किं वा स्थिरमिति पूर्वोक्तमेव पठित्वा) हन्त ! त्रिलोकाधीश्वरेण सुरनायकेनापि न तावद्दूरीकृता ममता । अथवा श्लाघनीयो विलक्षणविषयमहिमा—

वाचा वर्णयितुं विचिन्तयितुमप्यत्यन्तदूरे स्थितं
भोग्यं स्वानुभवैकवेद्यमनवद्याह्लादहृद्यात्मकम् ।
सर्वापेक्षितमप्यनन्यसुलभं पुण्यैकलभ्यं शुभं
को वा स्वर्गमधीनमुज्झितुमहो वैराग्यतः कांक्षति॥५॥

(नेपथ्याभिमुखमवलोक्य) हन्त—

जटी चीरवृतक्षामप्रतीको ध्यानमन्थरः ।
प्रसूनाहरणव्यग्रो जिष्णुरभ्येति तापसः ॥ ६ ॥

भवतु । वृक्षान्तार्हितस्तावदस्य प्रवृत्तिमुपलप्स्ये । (इति तथा करोति)

(ततः प्रविशतीन्द्रः)

इन्द्रः—(ध्यानमन्दं परिक्रम्य) कः कोऽत्र भोः ? (परितो विलोक्य) अये, न कोऽपि मदाज्ञानुयायी । भवतु अस्मत्प्रतीपं चूर्णयामि जगत्त्रयं वज्रेण । (इति बाहुयुगलं प्रसार्य विलोक्य च) हन्त, रिक्तहस्तोऽस्मि। (सोन्मादं)। कुमार, भो षडानन, किमद्यापि नायासि ? न ते कर्णपथं प्रविष्टोऽयं रावः ? धिक् त्वां द्वादश-

श्रवसम् । भवतु, पुत्रमाज्ञापयामि । तात, जयन्त, जय तं दृप्तं दानवाधमम् । सत्वरमायाहि । भवन्तमभिषिञ्चामि सुरचमूपतित्वे । (स्तम्भीभूय सर्वतोऽक्षि विक्षिप्य) किमिदम् ? पुत्रोऽपि न मामाभाषते । धिक्पुत्रम् । अयि पुलोमजे, किमु त्वमपि विलोमतामवलम्बसे, मा कुरु तावदेवं प्रियतमे मयि निर्वर्तय मदभ्यर्थनां, अस्मत्प्रतीपं जयन्तमेनं निष्कासय प्रासादात् । हन्त! किमिदं न कोऽपि मामनुयाति ? (सावेगं) धिगनधिकारिताम् । असंस्तुतजलावगाहो बलान्मज्जितोन्मज्जित इव संवृत्तोऽस्मि । (सखेदं)

नष्टराज्याधिकारस्य प्रजादूरीकृतस्य च ।
जीवितान्मरणं श्रेयो धिङ्मां जीवन्तमद्य हा ॥ ७ ॥

(इत्युन्मत्त इव चिन्ताकुलस्तिष्ठति)

वामनः—(स्वगतं) कष्टं ह्यनुभूतवैभवस्य निश्श्रीकत्वम्—

रम्भाद्यप्सरसां कटाक्षशबलीभूतो दिगीशेडितो
यो गन्धर्वमनोज्ञगानविवशश्रोत्रो विभूषोज्ज्वलः ।
उच्चैरावणवाहनस्सुरनुतो मन्दारमालाञ्चितः
स्वर्गे पर्यटति स्म तस्य विपिने ह्येकाकिनो हा गतिः ॥
॥ ८ ॥

इन्द्रः—भो दण्डधर, किमिति मत्प्राणान्नापहरसि ? किमु त्वमपि प्रतीपो मे ? (श्रवणमभिनीय) किमभिहितं, न प्रभवामि तावदमृताशिनस्ते प्राणानपहर्तुमिति । (सोन्मादहासम्) अमृतं नाम किं तदमृतम् ? (सभ्रूभङ्गमाकाशे लक्ष्यं बद्ध्वा) अस्ति वा जगत्यमृतमिति ? आम् अस्त्यमृतम् । (सहासबाष्पं)—

नारायणः करुणया मदनुग्रहाय
क्षीराम्बुधिं गिरिवरेण चिरं प्रमथ्य ।

तन्नोदपादयदमन्दबलावहं तत्
यत्पानतो यमभयं जनिमान्जहाति ॥ ९ ॥

हन्त, तादृशामृताशिनोऽपि मे किमेतादृशी दुरवस्था ? (दीर्घमुष्णं च निश्श्वस्य) दुरवगाहं नाम विधिविलसितम् ! (इत्यटवीपर्यटन-खेदमाभिनयन्प्रस्तरतले समुपविशति।)

वामनः—(स्वगतं) समुत्पाद्य मायया मयि वटुत्वसाधारणज्ञानमस्या-वगच्छामि तावदाशयम्। (इति तथा कृत्वोपसर्पति)

इन्द्रः—(सावेगं स्वगतं) कोऽयम्? महान्प्रमादः यदि मामिन्द्रं प्रत्य-भिजानीयात्। (इति ससम्भ्रममुत्थाय वृक्षान्तर्हितो भवति)

वामनः—(सान्तर्हासं, स्वगतं) श्लाघनीया मानातिरेकस्य चेष्टा। (प्रकाशं) कस्त्वं तपोघन ?

इन्द्रः—वटो विदितोऽस्मि सोऽहं सम्बोधनेन ननु ?

वामनः—किं तव नामधेयम् ?

इन्द्रः—(उपसृत्य सनिर्वेदं) तद्ज्ञानतः किमिह ते ?

वामनः—मुखपङ्कजं ते भ्रंशं श्रियः पिशुनयत्यभिधत्स्व कस्त्वम् ? ॥१०॥

इन्द्रः—(स्वगतं) पटुरयं वटुः, मन्मुखावलोकनमात्रेण विदितवृत्तान्त इव ज्ञायते। (प्रकाशं) अप्यास्ति ते परिश्रमः पुरुषलक्षणपरीक्षा-याम् ?

वामनः—अथकिम्। शृणु तावत्—

यत्ते नैसर्गिकं तेजस्तत्त्वय्यस्ति तपस्विनि।
पङ्काक्तमपि सद्रत्नं स्वकान्तिं न जहाति हि ॥ ११ ॥

इन्द्रः—(सवैलक्ष्यं) ह्रस्वाकृतेरपि ते दीर्घा दृष्टिः।

वामनः—किमाकारेण ? न श्रुतं किमु मूर्तिर्ह्रस्वापि कीर्तिर्दीर्घेति ?

पुरुषस्याकृतिर्लोके नैव कीर्तिप्रदायिनी।
अशोकमञ्जरी रम्याप्यगन्धाऽऽद्रियते किमु ॥ १२ ॥

तदुपविशतु भवान् । पश्यामस्ते हस्तलक्षणम् । (उभावपि शिलातले समुपविशतः ; इन्द्रः दक्षिणहस्तं प्रसार्य दर्शयति)

वामनः—(अवलोक्य) किमिदम् ? दम्भोळिग्रहणव्रणकिणस्थपुटित इव दृश्यते ते हस्तः । अपि सत्यम् ?

इन्द्रः—(स्वगतं) हन्त, सुशिक्षित इव पुरुषलक्षणपरीक्षायाम् । (प्रकाशं) का कथा तापसस्य मे कुलिशग्रहणप्रसङ्गे ?

वामनः—(पुनर्निर्वण्य) महदिदमाश्चर्यम्—

त्रैलोक्यावनदक्षतां पिशुनयत्यत्र स्थिता रेखिका
(पादतलमवलोक्य)
चक्राब्जध्वजपद्मचामरमुखा रेखा लसन्त्यत्र च ।
(मुखमवलोक्य)
नेत्रे श्रोत्रविसर्पिणी (उरस्थलमवलोक्य) भवदुरः
कल्पस्रजोऽपि क्षमं
तत्साक्षात्सुरनायको धृततपोवेषोऽसि सत्यं ब्रुवे ॥१३॥

इन्द्रः—(सलज्जं शिरोऽवनाम्य स्वगतं) अये, ज्ञातोऽस्म्यनेन । महदिदमाश्चर्यं लक्षणशास्त्रेण तावत्सर्वं प्रत्यक्षमिवाभाति । किं कथयेयमधुना ? इन्द्र एवास्मीत्यङ्गीकरोमि । (विचिन्त्य) भवतु । (प्रकाशं) अपि शक्नोषि कथयितुं पुनरपि कदा वा राज्यप्राप्तिरस्येति ?

वामनः—(समन्दस्मितं) अथकिम् । लक्षणमेव ते कथयति । (इति पुनरपि हस्तमवलोक्य) अचिरादेव भविष्यति ।

इन्द्रः—(सनिःश्वासं) बहुधा चिन्तितमपि न पश्यामि तावत्पुनरपि राज्यप्राप्तेर्निदानम् । तत्कथं कथयति भवान् अचिरादेव भविष्यतीति ?

**वामनः**—(विहस्य) प्रायो जगति स्वलाभे त्वरातिशयो व्याकुलयत्येवं जनं । निरीक्ष्यस्समयः—

प्राप्तेऽभ्युदयकाले तु तृणं यात्यस्त्रतां किल ।
दैवे तु प्रतिकूले स्याद्वज्रञ्चापि तृणोपमम् ॥ १४ ॥

तद्वामनेनापि वटुना मया कथमपि दाप्यते राज्यं यदि मह्यमर्धप्रदित्सा ।

**इन्द्रः**—(स्वगतं) हन्त, वटुरयमुत्कोचग्राहीव। अथवा किमनेन दापयितुं शक्यते ?

दुर्दान्तदानववशं भुवनत्रयं यत्
दम्भोळिपाणिरपि सङ्कुचितात्मसारः ।
कर्तुं वशे न चतुरोऽभवमद्य खर्वो
मह्यं प्रदापयति तत्कथमेष वर्णी ॥ १५ ॥

**वामनः**—(सहासं) किं चिन्त्यते ; " सर्वनाशे समुत्पन्ने ह्यर्धं त्यजति पण्डितः " ।

**इन्द्रः**—(सशीर्षान्दोलनं) तत्तु सत्यम् । किन्तु त्रैलोक्याधिपत्यहानिरिति हसाद्दानवाधमादाच्छिद्य कथमिव दाप्यते इति च । स्यादेतत्, कस्त्वम् ? किन्निमित्तमटवीपर्यटनम् ?

(नेपथ्ये)

सर्वदर्शननिष्णातधिषणो धिषणोऽस्म्यहम् ।
अहो मे बुद्धिविभवस्तपस्वित्वाय कल्पते ॥ १६ ॥

**इन्द्रः**—(ससम्भ्रमं) किमिदम् ? सुरगुरुरपि निर्वेदेनावेदयन्निस्सारतामात्मबुद्धिविभवस्यापीत एवाभिवर्तते ।

**वामनः**—(सानन्दं नेपथ्याभिमुखमवलोक्य)—

दारिद्र्यप्रकटनदक्षवल्कलोऽयं
मार्तण्डप्रसृतखरातपातिखिन्नः ।

एकाकी विपिनतटेऽपि पर्यटन्सन्
तेजस्वी विधिवशतां स्वयं व्यनक्ति ॥ १७ ॥

इन्द्रः—(सानुतापं) साधूक्तं वटुना।

(ततः प्रविशति बृहस्पतिः)

बृहस्पतिः—(दूरादेव वामनमवलोक्य सवैलक्ष्यभक्त्यतिशयं) अखण्डब्रह्माण्डावनधुरन्धरो भगवानजायमानो बहुधा विजायते। हन्त, स्वाश्रितरक्षणार्थं किं वा नानुष्ठितमनेन? (उपसृत्य सबाष्पमञ्जलिं बद्ध्वा)—

मीनकूर्मतनुभाक्पुरा हरे
स्वाश्रितान्सुरवरान्ररक्षिथ।
अद्य वामनशरीरतः प्रभो
किं करिष्यसि निवेदयाञ्जसा ॥ १८ ॥

इन्द्रः—(स्वगतं) कथं सर्वेश्वरोऽयम्? धिङ्मामन्यथाचिन्तितवन्तम्। (सवितर्कं) कुतो वा वामनता समाश्रिता? भगवता, किमु-मद्वामतापरिजिहीर्षया?

वामनः—सुरगुरो, वामनोऽयमभिवादयते। (इति प्रणमति)

बृहस्पतिः—(ससम्भ्रमं बाहुभ्यामुत्थाप्य) सर्वजगद्वन्द्यो भवान्। तदलमनेन कर्मणा।

वामनः—(सप्रश्रयं) अपि कुशलं बृहस्पते?—

यस्य प्रसन्नधिषणाविभवेन कृत्स्नं
लोकत्रयं ह्यनतिलङ्घितसीम निघ्नम्।
बृन्दारकाधिपतिरङ्गदानिर्विशेषं
लीलावशो भुजयुगेन बभार धर्मात् ॥ १९ ॥

बृहस्पतिः—नूनं बभार, न तु बिभर्ति। अत एव बृहस्पतिरपि वन-स्पतिसहवासी संवृत्तोऽस्मि। भगवन्, अलं परिहासेन। विश्व-शरीरी खलु भवान्। अहमपि विश्वान्तःपाती।

**इन्द्रः**—(सलज्जं)—

भवन्मायावृतात्माहं नारायणमपि प्रभो ।
मर्त्यसाधारणं त्वान्तु ज्ञातवान्क्षम्यतामघम् ॥ २० ॥

(इति प्रणमति)

**वामनः**—(समन्दस्मितं) सुरेश्वर, किमिदं, नानुपश्यामि त्वय्यघम् ।

(इत्युत्थापयति)

**इन्द्रः**—(बृहस्पतिमुपसृत्य) भगवन्—

नैवान्तरं सद्गुरुमन्तरा तमो
निर्याति शिष्यस्य चिरेण सञ्चितम् ।
तत्त्वोपदेशेन विनैव सद्गुरोः
नोदेति साक्षात्कृतिरच्युतस्य च ॥ २१ ॥

(एतदुभयमप्युपनतं तत्रभवतो गुरोर्महिमातिशयेन)

**वामनः**—(समन्दस्मितं बृहस्पतिमवलोक्य) वाचस्पते, दिवस्पति-रभिहितोऽयम् । मया दाप्यते ते राज्यं, यदि मह्यमर्घप्रदित्सेति । अयन्तु विचिकित्सते ।

**बृहस्पतिः**—(सहासं) भगवन्, चिदाचिद्वर्गान्तःप्रवेशदक्षो भवान् किमेवमभिदधाति । भवदायत्तं हि जगत् । दत्तमनुभवति भवता शचीपतिरयम् । तदद्यापि दस्युपराधीनमस्मै दापयितव्यं भवतैव भुवनम् ।

**वामनः**—(सहासं) अत एव पाकशासनोऽयमनवरतमपि भवत्साचिव्यमभिलषति—

परिशील्यैव चातुर्यं नियुङ्क्ते मन्त्रिकर्मणि ।
बुधं यस्सतु भोगैकसक्तोऽपि स्यात्समृद्धिमान् ॥ २२ ॥

(इन्द्रमवलोक्य) साधु पुरन्दर, एतादृशगुरुसाचिव्यात्सुसुख-मनुभवसि त्रैलोक्यम् ।

इन्द्रः—यदि पुनरपि भगवता दाप्येत ।

वामनः—(सवितर्कं) तत्तु सत्यं, कथं वा दापयामि ? स तु महात्मा बली बलिः । न कदापि धर्म्यात्पथः प्रच्युतः । कोऽपि जगति न कदापि मन्तुमन्तरा भवेद्धि दण्डभाजनम् । अत्र बृहस्पतिरेवाभिज्ञः ।

बृहस्पतिः—(सनिर्वेदं) अत्र तावदत्रत्यो वनस्पतिरेवाभिज्ञः ।

वामनः—कथमिव ?

बृहस्पतिः— देवदेव, नायमवसरः परिहासस्य—

सूत्रधारोऽसि लोकानां सर्वज्ञस्त्वं जगत्पते ।
जगद्रङ्गतटे जन्तून्सलीलं नर्तयस्यमून् ॥ २३ ॥

तद्यथा भवते रोचते । आश्रितरक्षणबद्धदीक्षो हि भवान् ।

वामनः—बृहस्पते, बलिस्तावत्—

धर्मैकसक्तहृदयः क्रतुकर्मनिष्ठः
मय्याहिताचलनिरन्तरभक्तिभारः ।
शुक्रोऽर्थतन्त्रनिपुणस्सचिवोऽस्ति तस्य
तच्चिन्तयामि कथमद्य लभेय राज्यम् ॥ २४ ॥

बृहस्पतिः—भगवन्—

विग्रहे दुर्ग्रहं दृप्तं बलिं जेतुं कथं भवेत् ।
तद्वञ्चनां विना नान्यमुपायमवलोकये ॥ २५ ॥

तद्भगवता भवता समाश्रयणीयाऽऽश्रितावनाय वञ्चना ।

इन्द्रः—(सप्रश्रयं) भगवन्, ममाप्ययमेवाशयः ।

वामनः—(स्वगतं) साधु, अस्मदाशयानुरोधि वचः । (चिन्तामभिनीय) (प्रकाशं) भवतु, बलिस्तावदिदानीं समारब्धाध्वरः तत्तत्सत्रक्षेत्रमेव प्रविशामः ।

इन्द्रः—(सशङ्कं) यद्यावामपि तत्सत्रक्षेत्रमागच्छेव भवेव च बलिना प्रत्यभिज्ञातौ ।

**वामनः**—(सौदास्यं) सति च मे मायाबले, किमनया विचिकित्सया ?

**बृहस्पतिः**—यथाज्ञापयति देवः ।

**वामनः**— क्रतुक्षेत्रं विशन्दैत्यं वशीकृत्यात्ममायया ।
करिष्याम्यद्भुतं कर्म पश्यतं वश्यचेतसौ ॥ २६ ॥

(इति निष्क्रान्तास्सर्वे)

इति श्रीयदुशैलवासिबालधन्वि जग्गूवकुलभूषण
कविविरचित बलिविजयनाटके
प्रथमोऽङ्कः

———

## द्वितीयोऽङ्कः

(ततः प्रविशति नन्दनवने पुष्पापचयं नाटयन्ती मञ्जुघोषा)

**मञ्जुघोषा**—(दीर्घं निश्वस्य) अह्महे, विहिविळसिदं जं पुव्वदेव्वाणं परिजणेहिं वि अम्हेहिं होदव्वं संवुत्तं (इति चिन्ताकुला तिष्ठति)।

(छाया—अहो विधिविलसितं, यत्पूर्वदेवानां परिजनैरप्यस्माभिर्भवितव्यं संवृत्तम्।)

**तिलोत्तमा**—(ससम्भ्रमं प्रविश्य) हळा मञ्जुघोसे, भग्गवो तुवरावीअदि भूळोए सहामण्डणकिदे तुरिअं मन्दारपुप्फगुम्भणं कादव्वं त्ति। तुमं दाव एत्थ अकिदकज्जा चिट्ठसि (इत्युपसर्पति)।

(छाया—हळा मञ्जुघोषे, भार्गवस्त्वरयति, भूलोके सभामण्डनकृते त्वरितं मन्दारपुष्पगुम्भनं कर्तव्यमिति। त्वं तावदत्राकृतकार्या तिष्ठसि)।

**मञ्जुघोषा**—(सचिन्तं) हळा किं करेमि ण? प्पसरेइ एव्व हत्थो अप्पणो कज्जं णिव्वट्टिदुं वि, अह्माणं दसा ईरिसी संवुत्ता त्ति।

(छाया—हळा किं करोमि? न प्रसरत्येव हस्त आत्मनः कार्यं निर्वर्तितुमपि, अस्माकं दशेदृशी संवृत्तेति)

**वनपालः**—(ससम्भ्रमं वृक्षान्तरात्प्रविश्य) (हस्तसंज्ञयैवानयोर्वाग्व्यापारं निवार्य)—

स्नात्वा शुनासीरसरोवरे कवि-
यातीह दैत्याधिपसौधमेककः।
तस्माच्छनैस्सल्लपतं सुरेष्वयं
सर्वाङ्गचक्षुर्हि कुशाग्रधीस्स्वयम् ॥ १ ॥

तिलोत्तमा—(सोद्वेगं) जइ एव्वं ता तुरिअं एव्व णिव्वट्टिअपसुव-इवरिवस्सो गमिस्सइ भूळोअं तं अह्मेहिं वि ळहु गन्दव्वं जण्णक्खेत्तं। (इति ससम्भ्रमं पुष्पापचयं नाटयति)

(छाया—यद्येवं तर्हि त्वरितं निर्वार्तितपशुपाविवरिवस्यो गमिष्यति भूलोकं तदस्माभिरपि लघु गन्तव्यं यज्ञक्षेत्रम् ।)

वनपालः—यद्येवं इदं तावद्दीयते, प्रापयतु भवती दैत्यराजं (इति निष्क्रम्य पुनः प्रविश्य दुकूलावगुण्ठितं रत्नभाजनं तिलोत्तमा-हस्ते निक्षिपति)

तिलोत्तमा—(अवगुण्ठनमुद्घाट्य सवैलक्ष्यं मञ्जुघोषायै दर्शयन्ती संस्कृतमाश्रित्य) भोः पृषदश्व महदिदमाश्चर्यं यदनवरतमपि वैजयन्ते पर्यटन्तीनामपि नास्माकं दृष्टिपथमारूढो ह्येतादृशो वस्तुविशेषः। कथं वा सम्पादितो भवता ?

वनपालः—दानवाधीशाज्ञया सम्पादितोऽयं, न तु मया।

तिलोत्तमा—कथमिव ?

वनपालः—बलिना तावदाज्ञप्ताः पारिजातादयस्सुरतरवः, पाकशास-नेनाप्यननुभूतपूर्वो वस्त्रभूषणविशेषोऽवभृथानन्तरं धार्यो भवद्भिः प्रेषणीयः इति।

तिलोत्तमा—युज्यते, (इति पुनरप्यवगुण्ठ्य) न ते यज्ञादिदृक्षा ?

वनपालः—(सनिश्श्वासं) अस्ति, किं करोमि ? कर्तव्या खलु राजाज्ञा तावदशून्या—

> क्रूरदण्डो हि दैत्येशस्स्वायत्तेषु सुपर्वसु।
> तत्सर्वैस्सर्वथा भाव्यमप्रमत्तैस्सुरैरिह ॥ २ ॥

मञ्जुघोषा—साहु भणिदं इमिणा।

(छाया—साधु भणितमनेन।)

वनपालः—तद्युवामपि राजनियोगमशून्यं कुरुताम् ।

उभे—तहा ।

छाया—(तथा)

(इति निष्क्रान्तास्सर्वे)

**मिश्रविष्कम्भः**

(ततः प्रविशति बृहस्पतीन्द्राभ्यां सह वामनः)

वामनः—(नेपथ्याभिमुखमवलोक्य) बृहस्पते, पश्यतु भवान् कियान्सम्भ्रमः पूर्वदेवानां—

तत इतो गमनागमनोत्सुकाः
कतिपये निजकार्यधुरन्धराः ।
ततमहानसधूमकरम्भिते
मखभुवो विचरन्त्यजिरेऽसुराः ॥ ३ ॥

बृहस्पतिः—(विलोक्य) हन्त, अप्सरसोऽपि भुजिष्या इव कर्मरताः । तथाहि—

काचिच्चन्दनपेषणैकनिरता काचित्स्रजां बन्धने
सक्ता काचिदनल्पकल्पितमहाकल्पा जलासेचने ।
काचित्फूत्कृतिवर्धितागरुमहाधूपाऽपराऽभ्यागत-
स्फीताराधनवस्तुसङ्ग्रहपरा दैत्येश्वरस्याज्ञया ॥ ४ ॥

इन्द्रः—(स्वगतं) कष्टं भोः कष्टं, यदस्मदसाधारणतया नियमितास्तावदप्सरसोऽत्र भुजिष्यास्संवृत्ताः ।

(नेपथ्ये वादित्रनादः)

वामनः—(नेपथ्याभिमुखमवलोक्य) किमिदं, अवसित इव सप्ततन्तुः । यन्निर्वर्तितावभृथो दिव्यालङ्कारालङ्कृतो महात्मा दानवसार्वभौमः प्रतिनिवर्तते । (निर्वर्ण्य) पुरन्दर, भवदीया अपि तदायत्तास्तत्कर्मणि व्यग्रा इव । पश्यतु भवान् (इत्यङ्गुल्या निर्दिशन्)

अस्तम्भतोरणमयं गगने समीरः
पुष्पैस्तनोति वरुणो धुतचामरोऽत्र ।
छत्रोच्चदण्डमपि दण्डधरो बिभर्ति
यात्रोत्सवेऽस्य शितिकण्ठसखोऽनुयायी ॥ ५ ॥

इन्द्रः—भगवन्, एतदखिलमप्यवलोकयतः प्रदग्धमिव मे हृदयं—

निरुपमसुकृतः कृतव्रतौघो
धरणितले विजितेन्द्रियो महात्मा ।
अनुभवति यदन्तरायशून्यं
तदिह सुखं भजति प्रभुर्बलिर्हि ॥ ६ ॥

वामनः—शतमन्यो, सुकृतमन्तरा न कोऽपि जन्तुरनुभवति फलमीदृशम् ।

बृहस्पतिः—(नेपथ्याभिमुखमवलोक्य) भगवन्, प्रविशति बलिस्सपरिवारस्सभाभ्यन्तरम् । तद्वयमप्युपसर्पामः ।

(सर्वे परिक्रम्य सभ्यानुपसर्पन्ति)

(ततः प्रविशति रत्नमयसिंहासनोपविष्टस्सभास्तारस्तूयमानो बलिः)

बलिः—(सभास्तारान्हस्तसंज्ञयैवोपवेश्य)—

सभ्या युष्मत्सहकृतिवशात्सप्ततन्तुं महान्तं
निष्प्रत्यूहं व्यरचयमहं प्राप्तशक्राधिपत्यः ।
युष्मत्प्रीतिर्मम च महते श्रेयसे कारणं स्यात्
प्रायो राज्यस्थितिरुभयगप्रीतिबन्धा हि लोके ॥ ७ ॥

वामनः—(जनान्तिकं) दिवस्पते, अपि श्रुतं ? लब्धराज्यस्थिरीकरणाय वरीवर्ति बलिरयं प्रजानुरागतत्परः ।

इन्द्रः—(जनान्तिकं) अथकिम् ?

सभ्याः—(साञ्जलिबन्धं) देवदेव, दुर्दान्तबृन्दारकवृन्दावमर्दनधुरन्धर, दानवाधीश्वर, सर्वमपि भवत्प्राभवातिशयेन स्वयमेव प्रचलति। के वयमत्र भवत्पादारविन्दवन्दनैकतानाः?

इन्द्रः—(स्वगतं) हन्त, प्रकृतयोऽप्यत्रानुरक्ताः।

(प्रविश्य)

पुरुषः—(साञ्जलिबन्धं) देवदेव, आवेदयति भार्गवः, "प्रचलतु नाम यथेप्सितं प्रकृत्यभ्यर्हणं, आगतोऽस्म्यनुपदमेव" इति।

बलिः—तथा। (प्रकृत्यभिमुखभूय) भोस्समलङ्कृतसभास्थानाः प्रजाः, नाहं स्वाभिमतं दातुकामः। किन्तु भवदभिलषितमर्थं दित्सुरस्मि। तत्सत्वरमावेदयन्तु स्वाभिमतम्।

वामनः—(स्वगतं) अयमेव समयस्स्वाभिमतसम्पादनाय, यदुशना न सन्निहितः। (उत्थाय प्रकाशं) अहमर्थी।

(सर्वे सविस्मयं निर्निमेषलोचना वामनं पश्यन्ति)

बलिः—(सविस्मयं स्वगतं) अये—

कुटिलकुन्तलकान्ततरालिको
हृदयहारिविशालविलोचनः।
श्रवणमूलविलम्बितकुण्डलः.
तपनकान्तिरहो प्रथमाश्रमी ॥ ८ ॥

(साञ्जलिबन्धमासनादुत्थाय प्रकाशम्)

दिव्यरूपोऽसि खर्वोऽपि सर्वचित्तापहारक।
कस्त्वं किं वेप्सितं तेऽद्य लीनं मे हृदयं त्वयि ॥ ९ ॥

अप्सरसः—(सवैलक्ष्यं परस्परं जनान्तिकं) अह्महे, को एसो? खव्वो वि रूवेण अह्माणं ओहरइ लोअणं हिअअं अ।

(छाया—अहो, क एषः? खर्वोऽपि रूपेणास्माकमपहरति लोचनं हृदयं च।)

कश्चन दानववृद्धः—(उत्थाय) देव, पुरन्दरारे, दानवमानमानन, सिंहासनोपविष्टं देवमयं दासजनो विज्ञापयितुं कामयते।

बलिः—(सिंहासने समुपविश्य) निवेदयतु भवान्।

वृद्धः—यद्यपि नूनमयं वामनो मनोहररूपो माननीय एव तथापि मे काचन विचिकित्सा, सहस्राक्षपक्ष्येणानेन भवितव्यमिति—

मायावी सुरपतिसाह्यकृन्मुरारिः
दैत्येन्द्रानजयदचिन्त्यचित्ररूपः।
तर्ह्येवं मनसि विचार्य सम्यगस्मिन्
यद्देयं वितरतु तद्भवानमुष्मै॥ १०॥

बलिः—(ससान्त्ववचनं) रूपमेवास्यैतन्महिमानं व्याचष्टे। तदलं विचिकित्सया।

अमात्येष्वन्यतमः—(ससम्भ्रममुत्थाय) न विस्रम्भकारणं हि रूपम्। तदवधारयतु देवः—

कमलारमणः पुरा सरोषं
निजमायाधृतनारसिंहरूपः।
प्रपितामहमुद्भटप्रतापं
तव हन्ति स्म हि विश्वसार्वभौमम्॥ ११॥

विचित्ररूपो हि पुरुहूतपक्ष्यो निसर्गतो दैत्यद्वेषी किं वा नाचरेत्? तदलं रूपश्लाघनया। गुणः परं परिशील्य ग्राह्यः।

वामनः—

अधिताम्नायोऽहं गुरुवरसपर्यैकनिरतः
षडङ्गाध्यायी च श्रुतिशिरसि निष्णातधिषणः।
निजाचारासक्तो दितिजनृपते ब्रह्मणिचरः
किमन्याद्विज्ञेयं कथयितुमहं सज्ज इह ते॥ १२॥

बलिः—(अमात्यमवलोक्य) यद्यपि साचिव्यानुगुणमभिहितममात्येन तथापि—

यत्राचारो लसति बहुशस्तस्य शास्त्रे न धीस्स्यात्
शास्त्राभिज्ञो य इह स निजाचारनिष्ठो न गर्वात् ।
अस्मिन्नेतद्द्वितयमपि तद्वर्तते दीप्रमूर्तौ
किं तर्केण प्रभुरहममुं तर्पयाम्यर्थदानैः ॥ १३ ॥

अमात्यः—देव, राज्यतन्त्रे दत्तदृष्टिना मया तावदेवमावेदितम् । अत्र सन्ति च बहवो वृद्धाः । ते तु कथं मन्यन्ते ?

केचन दानववृद्धाः—(उत्थाय) साधूक्तममात्येन । न हि तद्वचनमेव विस्रम्भभाजनम् । जगति भवन्ति बहवस्स्वार्थैकनिष्ठा श्वेता-दृशास्समारोपितात्मगुणविकत्थनपराः ।

वामनः—दानवसार्वभौम—

आत्मश्लाघा परं सद्भिर्गर्हिता निर्निमित्तिका ।
प्रसङ्गात्कथितास्सत्यं गुणा मे न तु दम्भतः ॥ १४ ॥

बलिः—ब्रह्मचारिन्, साध्ववगतो भवदाशयः—

केषुचिद्गुणिनं त्वान्तु निर्गुणं निगदत्सु च ।
सद्गुणानां प्रकाशोऽत्र कर्तव्योऽवश्यमात्मना ॥ १५ ॥

तदत्र तावद्भवतो न कोऽपि दोषः । (वृद्धानवलोक्य) भोः प्रतीक्ष्याः, न कदापि बलिर्भग्नप्रतिज्ञो हि । तदधुना यथाप्रतिज्ञं कर्तुकामोऽस्मि । किमनया विचिकित्सया ?

इन्द्रबृहस्पती—(परस्परं जनान्तिकं) अहो, दानवस्यापि बलेर्धर्मे स्थिरप्रतिज्ञता । अथवा विचित्रा खलु भगवतो माया ।

अमात्यः—(स्वगतं) हन्त, अस्मत्सार्वभौमोऽयं पूरयतीव मनोरथ-मस्य । किं करोमि ? (प्रकाशं) देव, पूरयतु नाम मनोरथ-मस्य, अयन्तु कमर्थमर्थयते, इति तु ज्ञातव्यम् ।

वामनः—

न मे राज्ये कोशे गजरथपदात्यश्वकलिते
बले काङ्क्षा किन्तु प्रतिदिनमनल्पव्रतजुषे ।
विविक्तं मत्पादत्रितयपरिमेयं क्षितितलं
प्रदेह्येतन्मह्यं दितितनुज ते यद्यभिमतम् ॥ १६ ॥

बलिः—(सभ्यानवलोक्य) अपि श्रुतं भवद्भिरेतदभ्यर्थितम् ?

सभ्याः—(सौदास्यम्) किमियदेव ? प्रदातुमर्हति देवः ।

बलिः—(सहर्षं) ब्रह्मचारिन्, यत्रापेक्षितं तत्र दत्तम् ।

वामनः—दैत्याधीश्वर, न तथा, किन्तूदकधारानिपातेन प्रदातव्यं मत्पादत्रयपरिमितं स्थलम् ।

बलिः—महान्प्रमोदः, तथास्तु, कः कोऽत्र भोः ? भृङ्गारः, भृङ्गारः, (शुक्रशिष्यस्सविनयमानीयार्पयति) ।

वामनः—(बलिमुपसृत्य दक्षिणपाणिं प्रसार्य तिष्ठति) ।

बलिः—(आसनादुत्थाय भृङ्गारमावर्जयितुमुद्युङ्क्ते) ।

(ससम्भ्रमं पटाक्षेपेण प्रविश्य)

भार्गवः—सार्वभौम, कोऽयमुद्यमः, मा पातय दानधाराम् ।

बलिः—(सोद्वेगं) किमर्थम् ?

भार्गवः—अनरालप्रकृते, न जानाति भवान्मायाविनमेनम्—

हरिणाजिनोत्तरीयो
माणवकोऽयन्तु वामनाकारः ।
तालातपत्रसुभगो
भगवान्भवतः प्रलोभने निरतः ॥ १७ ॥

बलिः—(सविस्मयं) कथं, साक्षाद्भगवानयं; (साञ्जलिबन्धम्) धन्योऽस्मि ।

पुरुषोत्तमेन भवता श्रियःपते
बत वामनत्वमवलम्बितं कुतः ।
त्वदधीनमेतदखिलं किलाथवा
जनमर्थिता वितनुते हि वामनम् ॥ १८ ॥

(सभक्त्युन्मेषबाष्पम्)

वेदान्तवेद्यमनवद्यगुणौघपूर्णं
सङ्कल्पमात्रपरिकल्पितसर्वलोकम् ।
ब्रह्माद्यगोचरमनेन मुकुन्दमक्ष्णा
प्रेक्षे यदत्र तदहं सुकृती कृतार्थः ॥ १९ ॥

भार्गवः—चक्रवर्तिन्, लब्धस्वार्थोऽयं भवन्तमधः पातयति । तदलमनेन कर्मणा ।

बलिः—(सबाष्पं) आचार्यवर्य, शान्तं पापं, शान्तं पापं, कथं माममधः पातयति ? न कदाप्येवं पतितोद्धारको हि भगवानयम्—

लक्ष्मीपतेर्नारकितारकस्य
ध्यानात्पवित्रः पतितोऽपि हि स्यात् ।
साक्षान्मुकुन्दाय कृतप्रणामः
कथं भवेयं पतितोऽहमत्र ॥ २० ॥

(इति दातुमिच्छति)

भार्गवः—(बलिहस्तमवलम्ब्य) दानवसार्वभौम, किमु न जानासि निसर्गत एवायं दैत्यद्वेषीति ?

बलिः—आचार्य, भवानपि जानात्येव भक्तवत्सलोयमिति ।

भार्गवः—दैत्येश्वर, भक्तमपि दानवं वञ्चयत्ययम्, तन्मा पातय दानधारां याञ्चानर्होऽयम् ।

**बलिः**—(सविनयं) दैत्यगुरो यदि वञ्चयेत् तथाप्यनुगृहीतः कृतार्थो भवेयम् । किञ्च, साधूक्तमाचार्येण, याच्ञानर्होऽयमिति । चतुर्वर्ग-फलप्रदोऽयं कथमर्थी भवितुमर्हति ? मद्भाग्यवशादेव भगवानर्थी सन्नायातः । तदलं तर्कवितर्कविमर्देन । कृतप्रतिज्ञोऽहं ददाम्येव पादत्रयपरिमितं स्थलम् । (इति भृङ्गारमावर्जयितुमुद्युङ्क्ते)

**भार्गवः**—(स्वगतं) हन्त, कृतप्रतिज्ञोऽयं धर्मात्मा न निवर्तते समुद्दिष्टात्कर्मणः । किं करोमि ? (विचिन्त्य) भवतु । (इत्यन्तर्दधाति)

**बलिः**—(स्वगतं) हन्त, कुपित इवाचार्यः । भवतु नाम । निष्प्रत्यूहमधुना प्रवर्तयामि दानकर्म । (प्रकाशं) भगवन्, पूर्णकामाय तुभ्यं ददामि स्थलम्, अङ्गीकुरु दानधाराम् । (इति भृङ्गारमावर्जयति)

**वामनः**—(सस्मितं) दानवेश्वर, किमिदं ? नैव पतति दानजलम्, किं मां प्रलोभयसि ?

**बलिः**—(सावेगं) भगवन्—

किमिदं महदाश्चर्यमाचार्योक्त्यतिलङ्घनात् ।
स्यादेवं विपदां मूलं गुरूल्लङ्घनमेव हि ॥ २१ ॥

**वामनः**—(सशीर्षान्दोलनं) भवतु, बले, मा चिन्तय । परिहराम्यन्तरायम्, (इति भृङ्गारनालिकाभ्यन्तरं निजदर्भपवित्राग्रं प्रवेशयति)

**भार्गवः**—(मायां विहाय प्रत्यक्षीभूय दक्षिणनयनं परिमृजन् ) दानव-सार्वभौम—

वितर प्रथमं यदिष्टमस्मै
निगमान्तप्रथितप्रभाव एषः ।
सुकृतप्रतिबन्धकस्य यत्स्यात्
अनुभूतं फलमद्य तन्मयेह ॥ २२ ॥

भगवन्, क्षन्तव्यमागः । (इति वामनं प्रणमति)

वामनः—(समन्दहासं) दानवाचार्य, किमु भवतापराद्धम्? नानुपश्यामि भवन्तमपराधिनम्, उत्तिष्ठ।

(भार्गवः—उत्थाय मन्त्रपूर्वकं स्वयमेव दापयति दानधाराम्)

(गगनात्पुष्पवृष्टिः पतति)

(अनुपदमेवा ताकारः प्रवृद्धो वामन ऊर्ध्वलोकमानमेकेन पादेन अन्येन च भूलोकमानमभिनयति)

(सर्वे सविस्मयं पश्यन्ति)

बलिः—(सविस्मयमूर्ध्वमवलोक्य साञ्जलिबन्धम्)—

ज्योतिर्मण्डलमध्यवर्तिजलमुक्सङ्काशकायो महान्
नक्षत्रग्रहतारकाद्युतिहरस्फीतप्रकाशोज्ज्वलः।
ऊर्ध्वोत्क्षिप्तबलारिरत्नविजयस्तम्भायमानैकक-
स्थूलोरुः क्षितिविस्तृतान्यचरणो मां पातु नारायणः ॥२३॥

भार्गवः—भगवन्—

एकेन चक्षुषाऽहं
काणोऽप्यधुना भवामि किल धन्यः।
यत्पश्यामि महान्तं
त्रिविक्रमं त्वां क्रमात्तभुवनान्तम् ॥ २४ ॥

(इत्यञ्जलिं बध्नाति)

त्रिविक्रमः—बले मत्पादद्वयपरिमितस्तावदुपात्तः प्रदेशः। क्व पुनरवशिष्टः?

बलिः—(साञ्जलिबन्धं)—

भक्तानां यो हृदयकमले कोमले नित्यवासः
स्वाङ्के लक्ष्म्या मृदुलमृदुलैः पाणिभिर्लालितो यः।
तेन श्रीमन्कुरु मुकुटिनं पादपद्मेन मां द्राक्
कोटीरेण प्रकृतिविकृतेनास्मि नाहं किरीटी ॥ २५ ॥

त्रिविक्रमः—दानवेश्वर, यद्यपि मद्भक्त एव भवान् तथापीदमवधारय—

मन्नियोगात्सहस्राक्षस्त्रैलोक्यप्रभुतां गतः ।
तद्विरुद्धं त्वयारब्धं पातालं त्वां नयामि तत् ॥ २६ ॥

बलिः—यथा रोचते भगवते । (साञ्जलिबन्धं) इदमेकमभ्यर्थयते भवदङ्घ्रितामरसैकसेवाहेवाकोऽयं—

दिवि भुवि पाताले वा
ममास्तु वासो मुकुन्द तव कृपया ।
दिव्यं दर्शय रूपं
सततं पश्यन्कृतार्थतां यामि ॥ २७ ॥

(क्षितितलनिहितजानुयुगलो मस्तकमवनम्य)—

निरुपमसौन्दर्यनिधे
निधेहि मयि तेऽङ्घ्रिदास्यसौभाग्यम् ।
चिरमिह लोके धन्यो
भवेयमानन्दसिन्धुमग्नात्मा ॥ २८ ॥

त्रिविक्रमः—तथास्तु । (इति चरणेन बलिमस्तकमवष्टभ्य बलिं भूविवरं नयति) (सर्वे सभक्त्युन्मेषं पश्यन्ति)

(गगनात्पुष्पवृष्टिः पतति) (तत्क्षणमेव करगृहीतमन्दारमाला नाकलक्ष्मीर्गगनादवतरति)

लक्ष्मीः—(इन्द्रमुपसृत्य)—

बलौ बलिनि सक्ताहमद्यदैत्यार्यनुज्ञया ।
श्रये त्वां विबुधाधीश लतेवोपघ्नशाखिनम् ॥ २९ ॥

(इति पुरन्दरकन्धरायां मन्दारमालामर्पयति)

दिक्पालाः—(बाहुमुद्यम्य) विजयतां देवदेवः।

इन्द्रः—(स्वप्रकृतिमवाप्य त्रिविक्रमं प्रणमति)

त्रिविक्रमः—(इन्द्रमुत्थाप्य) पुलोमजाजाने, किं ते भूयः प्रियमुपहरामि?

इन्द्रः—(सविनयं)—

जितश्शत्रुस्त्वया देव दत्तं मे भुवनत्रयम्।
नाकलक्ष्म्या वृतश्चाहं किमितोऽप्यस्ति मे प्रियम्॥ ३०॥

तथापीदमस्तु। (भरतवाक्यम्)—

भूपालाः परिपालयन्तु भुवनं न्याय्येन सम्यक्पथा
स्याद्गोब्राह्मणमण्डलाय कुशलं लोकोऽस्तु नित्यं सुखी।
कासारा रसपूरिता विटपिनः पुष्पैः फलैस्सम्भृताः
सस्याढ्या धरणिश्च सन्तु समये वर्षन्तु धाराधराः॥ ३१॥

(निष्क्रान्तास्सर्वे)

इति श्रीयदुशैलवासि वाधूलकुल
भूषणकविविरचिते बलिविजये
द्वितीयोऽङ्कः।

———

॥ श्रीः ॥

॥ शुभमस्तु ॥

॥ श्रीमते हयग्रीवाय नमः ॥

# अमूल्यमाल्यम्

---

## प्रथमोऽङ्कः

कस्मै ग्रथ्नासि राधे स्रजमतिमधुरां कालमेघाय नाके
दूरे तस्य स्थितिर्हि प्रियतममनसा भक्तिभाजाऽर्पयामि ।
तुष्टः किन्ते ददाति प्रियममृतमिति स्मेरपङ्केरुहाक्ष्या
प्रोक्तां सूक्तिं निशम्य प्रमदपरवशो यस्सजीयान्मुकुन्दः ॥ १ ॥

(नान्द्यन्ते ततः प्रविशति सूत्रधारः)

**सूत्रधारः**—(सानन्दं समन्ताद्विलोक्य)

नानानाटकनिर्माता यः कोविदमुदावहः ।
स एवास्यापि कर्ता हि जग्गूवकुलभूषणः ॥ २ ॥

अये ! किन्नु खलु मयि विज्ञापनैकताने शब्द इव पश्यामि तावत्, (परिक्रम्य) आम् ! ज्ञातम् । दधिभाण्डो नाम गोपवृद्धो निर्वेदेन किमपि प्रलपन्नास्ते ।

(निष्क्रान्तः)

---

(स्थापना)

(ततः प्रविशति निजगृहाजिरगतो लगुडहस्तो दधिभाण्डः)

**दधिभाण्डः**—(आत्मानं निर्वर्ण्य)—

असृङ्मांसवसामज्जापूर्णे जीर्णे मलाविले ।

शरीरेऽस्मिन्महत्प्रेम हन्त माया मुरद्विषः ॥३॥

(विचिन्त्य) भवतु, भवतु, यथा भगवतस्सङ्कल्पः !

(ऊर्ध्वमवलोक्य) निर्वर्तितदोहा गावः मार्तण्डोऽपि युगान्तरमधिरूढ. किन्तु खलु, अद्यापि बालका गोप्रचाराय नागताः । (कम्बलोष्णीषं भूमौ निधायोपाविश्य) विलम्बेरन्पर्युषिताय, (उन्मत्त इव हसंस्ताम्बूलवीटिकां मुखे क्षिपन्) दिष्ट्या मे गोकुले जनिः, हन्त भोः, अद्यापि बहवो नन्दसूनुं मन्वते मनुष्यसाधारणम् । हन्त, माया, माया, (साट्टहासं) दामोदर, भो नवनीतचोर, ज्ञातोऽसि मया, हूं, भवतु, समयमनुपालयामि । यदा कदापि, मदायत्तो भविष्यसि किमु मुञ्चेयं, (सबाष्पं) हन्त, सौलभ्यं दामोदरस्य । (ससंभ्रमं प्रविश्य)

दामोदरः---तात, तात, (चालयति)

दधिभाण्डः--(सबाष्पं तूष्णीं सध्यानमास्ते)

दामोदरः--(मुखं निर्वर्ण्य) तात, कुतो रोदिषि ?

दधिभाण्डः--(सगद्गदं) बद्धोऽस्मीति ।

दामोदरः--(सावेगं) केन ?

दधिभाण्डः---मायाजालेन ।

दामोदरः--कस्य ?

दधिभाण्डः---भवतः ।

दामोदरः--(सस्मितं) भवतु, भवतु, तात, (सानुनयं) अप्युपकरोषि ?

दधिभाण्डः—किमहम् ?

दामोदरः--(नवनीतपाणिं लिहन्) तात, सा वनमाला नाम गोपी मद्ग्रहणायानुयाति, क्वापि मां विधेहि, उत्तिष्ठ ।

दधिभाण्डः--(स्वगतं) भवतु, (प्रकाशं) न शक्नोम्युत्थातुम् ।

**दामोदरः**—अहमुत्थापयामि । (तथा करोति)

**दधिभाण्डः**—(अभ्यन्तरं प्रतिश्य) आयाहि, कृष्ण आयाहि ।

**दामोदरः**—(उपसृत्य) क्व निलीये ।

**दधिभाण्डः**—क्षिप्रमुपविश ।

**दामोदरः**—ततः ।

**दधिभाण्डः**—उपविशतु भवान् ।

**दामोदरः**—(उपविशति)

**दधिभाण्डः**—(भाण्डं न्युब्जीकरोति)

सरभसं प्रविश्य (रज्जुहस्ता) **वनमाला**—बुड्ढ, एत्थ, आअदोसौ गोणीदचोळो (छाया–वृद्ध, अत्रागतस्स नवनीतचोरः ?)

**दधिभाण्डः**—अम्ब, किं तव गृहेपि लुण्ठितम् ?

**वनमाला**—(२) अहइं त्थोकं वि णत्थि, किं भणिस्सं ससुरस्स ? (रोदिति) (छाया–अथ किं स्तोकमपि नास्ति, किं भणिष्यामि श्वशुराय ?)

**दधिभाण्डः**—अत्र नायातः ।

**वनमाला**—अवि सच्चम् । (छाया–अपि सत्यम् ।)

**दधिभाण्डः**—अत्र कुतो वाम्ब, आयाति ।

**वनमाला**—होदु गहीदो हवे, सरिसं करिस्तं । (छाया–भवतु, गृहीतो भवेत् सदृशं करिष्यामि ।)

**दधिभाण्डः**—सत्वेवं न गृह्यते, अम्ब

**वनमाला**—ता कहं (छाया–तर्हि कथं)

**दधिभाण्डः**—प्रीत्या समर्पय नवनीतम् ।

**वनमाला**—(सभ्रूभङ्गं) हूं, समप्पेहि तस्स चोळस्स । (निष्क्रान्ता) (छाया–हूं समर्पय तस्मै चोराय ।)

**दामोदरः**—(मन्दं) गता किमु ?

दधिभाण्डः—अथ किं । (भाण्डोपर्युपविशति)

दामोदरः—तात, मोचय माम् ।

दधिभाण्डः—मां मोचय ।

दामोदरः—नहि बद्धस्त्वम् ।

दधिभाण्डः—त्वं किल नैव बद्धः ।

दामोदरः—तात, अलं परिहासेन, मोचय माम् ।

दधिभाण्डः—दामोदर, अलं परिहासेन मां मोचय ।

दामोदरः—भवन्तं कस्मान्मोचयामि ।

दधिभाण्डः—भवन्तं कस्मान्मोचयामि ।

दामोदरः—ननु कटाहादस्मात् ।

दधिभाण्डः—मामप्यण्डकटाहादस्मात् ।

दामोदरः—अलं, उक्तिप्रत्युक्तिकया, ननु, न मोचयसि ?

दधिभाण्डः—यदि मोचयेन्माम् ।

दामोदरः—तात, बद्धाञ्जलिरस्मि ।

दधिभाण्डः—(सबाष्पगद्गदं) शान्तं पापं, सार्थय ममाञ्जलिं । (अञ्जलिं बध्नाति)

दामोदरः—तथास्तु ।

दधिभाण्डः—अपि सत्यम् ।

दामोदरः—सत्यं मुक्तोऽसि ।

दधिभाण्डः—उद्धरामि भाण्डं दर्शय स्वरूपं ।

दामोदरः—हन्त, ते हस्तागतोऽस्मि ।

दधिभाण्डः—(साट्टहासतालं) किमु मुञ्चानि, दर्शयसि ।

दामोदरः—तथास्तु ।

दधिभाण्डः—(भाण्डमुत्थाप्य विलोक्य) हन्त, नास्ति कृष्णः, (सबाष्पाञ्जलिं) क्वासि दामोदर, देहि दीनाय दर्शनं,

कालियमर्दन क्वासि, (मन्दं तत्र तत्रान्विष्य) दामोदर, किमद्यापि वञ्चना? अङ्गीकुरु दधिभाण्डं, पश्य, अयं पयःकुम्भः। इदं ते नवनीतं, अभ्यन्तरादानीय सर्वमपि पुरो निक्षिप्य एहि कृष्ण, (सवैलक्ष्यं विलोक्य) किन्तु खलु—

चतुर्भुजधृतायुधं नवपयोदकान्तं स्फुरत्
किरीटमतुलप्रभं मधुरमन्दहासाननम्।
सुनूपुरमनोहरप्रयतभक्तभोग्याङ्घ्रिकं
कनत्कनकवाससं मधुरिपुं समीक्षे कृती॥ ४॥

(सप्रदक्षिणं साष्टाङ्गं प्रणमति) (तच्छिरसस्तेजस्समुत्थाय कृष्णाङ्घ्रिं प्रविशति) (नेपथ्ये) जम्बूफलं, जम्बूफलं,

दामोदरः—अये, क्रेयमिव (निजरूपमासाद्य बहिरागत्य) आनय, आनय।

(शिरोनिहितजम्बूफलपिटका प्रविश्य) विक्रेत्री—(सभ्रूभङ्गं) हुं, तुमं खु कीणासि। (परिक्रामति) (छाया-हूं त्वं खलु क्रीणासि)

दामोदरः—(अनुधाव्य) क्रीणामि, निधेहि। (अर्गलीभवति)

विक्रेत्री—दंसेहि काअणिअं। (छाया-दर्शय काकणिकाम्)

दामोदरः—निधेहि, दर्शयामि।

विक्रेत्री—(पिटकं भूमौ निधायोपविश्य) दंसेहि। (छाया-दर्शय)

दामोदरः—देहि तावदेकं, पश्यामस्स्वादु वेति। (फलमाददाति)

विक्रेत्री—(सरोषमाच्छिद्य) तुमं खु गेह्णासि। (उत्तिष्ठति) (छाया-त्वं खलु गृह्णासि)

दामोदरः—तिष्ठ, तिष्ठ, (नेपथ्याभिमुखमवलोक्य) बाले, एहि तावत्; ददामि जम्बूफलं।

(सरभसं प्रविश्य) बाला—देहि। (हस्तं प्रसारयति)

दामोदरः—बाले, न ददाति तूष्णीमियं, ते कनकवलयमेकं प्रत्यर्प्य फलान्याददामः ।

बाला—हूं कुप्पेइ मह अम्बा। (छाया—हूं कुप्यति ममाम्बा)

दामोदरः—कथयाम्यहमम्बायै। (वलयमवमुच्य तस्यै दातुमुद्युङ्क्ते)

विक्रेत्री—(परितो विलोक्य वलयमादाय फलान्यर्पयित्वा सरभसं निष्क्रान्ता)

दामोदरः—(बालाया हस्तं फलैस्सम्पूर्य) गच्छ गृहं।

बाला—तुमं वि आअच्छ, मह अंबा कुप्पेइ। (छाया—त्वमप्यागच्छ, ममाम्बा कुप्यति)

दामोदरः—(जम्बूफलं खादन्) गच्छ त्वं, अनुपदमागच्छामि। (निष्क्रान्तः)

बाला—अंबाए दंसइस्सं। (परिक्रामति) (छाया—अम्बायै दर्शयिष्यामि)

(ससम्भ्रमं कृष्णेण सह प्रविश्य) गोपी—(सदन्तपीडं) कहिं सा वळाई। (छाया—कुत्र सा वराकी)

दामोदरः—पश्य, इत एवागच्छति,

गोपी—(सत्वरमुपसृत्य) कहिं वळअं (संताड्य) केण गहीदं? (छाया—कुत्र वलयं केन गृहीतम्)

बाला—(रुदती) णेण। (छाया—अनेन)

दामोदरः—न मया, दत्तमनयैव।

गोपी—(कृष्णं गृहीत्वा) पिसुण, तुमं एव्व कदुअ बाळाए किदं त्ति भणासि। एहि तुह अंबाए कहइस्सं। (उभावप्याकर्षन्ती परिक्रामति) (छाया—पिशुन, त्वमेव कृत्वा बालया कृतमिति भणसि, एहि। तवाम्बायै कथयिष्यामि।)

(ततः प्रविशति निजगृहोपविष्टा यशोदा)

यशोदा—(विलोक्य) किं णि किदं इदो वच्छेण। एसा उण पिसुणा

विअ दीसइ। (छाया–किमपि कृतं भवेद्वत्सेन, एषा पुनः पिशुनेव दृश्यते)

गोपी—(उपसृत्य) पेक्ख, तुह पुत्तेण फळाकिदे इमाए वळअं दिण्णं। (छाया—पश्य तव पुत्रेण फलकृते अस्या वलयं दत्तम्) (बालाया हस्तं पुरः प्रसार्य विलोक्य च सवैलक्ष्यं) अह्मो, कणअमआइ फळाइ। (छाया—अहो कनकमयानि फलानि) (बालामादाय निष्क्रान्ता)

यशोदा—जाद, एव्वं ण करणिज्जं। (छाया—जात एवं न करणीयम्) (कृष्णमादाय चुम्बति)

दामोदरः—अम्ब, जम्बूफलं क्रीतं, पश्य मे जिह्वां। (दर्शयति)

यशोदा—क्रिण्णु खु, तुह हिअए दहिभंडो विअ। (छाया–किन्नु खलु तव हृदये दधिभाण्ड इव)

(ससम्भ्रमं प्रविश्य) गोपाः—(सबाष्पं) अम्ब,

यशोदा—कुदो तुह्माणं ळोअणं बाहाउळं। (छाया–कुतो युष्माकं लोचनं बाष्पाकुलं?)

गोपाः—दहिभण्डो माळिदो णेण। (छाया—दधिभाण्डो मारितोऽनेन)

यशोदा—कहं, सो बुड्ढो। (छाया–कथं? स वृद्धः)

गोपाः—अहइं। (छाया–अथकिं)

यशोदा—दामोदळ, किण्णु खु एदं। (छाया–दामोदर, किन्नु खल्वेतत्)

दामोदरः—(भयमभिनयन्) किं मया कृतं?

गोपाः—(सक्रोधं हूं, किं मया कृतं करणिज्जं कदुअ किं मया कृतं, तुमं दाणिं तत्थ गदो णु। (छाया—करणीयं कृत्वा त्वमिदानीं तत्र गतो ननु)

दामोदरः—अम्ब, वनमालाया भीतोऽहं गतः।

गोपाः—ताए भीदी कुदो? (छाया—तस्या भीतिः कुतः)

(प्रविश्य) **वनमाला**—मह गेहे णोणीदं विलुंठिअ तस्स गेहं प्पविट्ठो, इमस्स एव्व तं कज्जं (छाया—मम गेहे नवनीतं विलुण्ठ्य तस्य गेहं प्रविष्टः (अस्यैव तत्कार्यम्)

**दामोदरः**—(रुदन्) न लुण्ठितमम्ब, दधिभाण्डोपि जीवति ।

**वनमाला**—आम, लुंठिदं, दंसेहि दाव । (छाया—आम न लुण्ठितं दर्शय तावत्)

**गोपाः**—किं जीव इदंसेहि दाव । (छाया—किं जीवति दर्शय तावत्)

**दामोदरः**—गच्छन्तु भवन्तः, दर्शयामि ।

**सर्वे**—हूं तुमं पुलदो गच्छ । (छाया—हूं त्वं पुरतो गच्छ)

**दामोदरः**—तथास्तु । (सर्वैरपि परिक्रम्य वनमालाया गृहं प्रविश्य) पश्यन्तु ।

**सर्वे**—(द्विगुणतरं नवनीतं विलोक्य सवैलक्ष्यं तिष्ठन्ति)

(प्रविश्य) **दधिभाण्डः**—एवं किल वर्धते सर्वमप्यङ्गीकृतमनेन । (अन्तर्दधाति)

**सर्वे**—अच्चरिअं खु एदं, (साञ्जलिबन्धं) मरिसदु दामोदलो सावराहं इमं जामं । (परिक्रम्य निष्क्रान्ताः) (छाया—मृष्यतु दामोदरस्सापराधमिमं जनम्)

**दामोदरः**—(वेणुं वादयन्परिक्रामति) सादरं प्रविश्य निजगृहदेहलीमधिगम्य चिन्तयन्ती णमो भअवदो दामोदलस्स । (बद्धाञ्जलिस्तिष्ठति) (छाया—नमो भगवते दामोदराय)

(लगुडहस्तः प्रविश्य) **वृद्धश्वशुरः**—घरम्मि तुह णहि कज्जं तस्स जाळस्स मुळळीणादं सुणिअ प्पत्थिदासि दासीए पुत्तिआ खु तुमं । (लगुडेन ताडयति) (छाया—गृहे तव न हि कार्यं तस्य जारस्य मुरलीनादं श्रुत्वा प्रस्थितासि दास्याः पुत्रिका खलु त्वम्)

(प्रविश्य) **वल्लभः**—(सामर्षदन्तपीडं) गच्छ ळे दासीए पुत्ति अब्भन्तलम्मि दहिमहणं वि उज्झिअ कहिं प्पत्थिदा । (केशपाशे

हस्तमाधाय चालयति) (छाया-गच्छ रे दास्याः पुत्रि, अभ्यन्तरे दधिमथनमप्युज्झित्वा कुत्र प्रस्थिता)

(चिन्तयन्ती---ध्याननिर्मीलिताक्षी तिष्ठति ।)

दामोदरः—(उपसृत्य) किमर्थमबलां पीडयतः ?

वृद्धः—अह्माणं घरस्स उत्तंतेण किं तुह गच्छ मग्गे। (छाया–अस्माकं, गृहस्य वृत्तान्तेन किं तव गच्छ मार्गे)

(चिन्तयन्ती---सहर्षं नेत्रमुन्मील्य सादरं दामोदरं पश्यति ।)

तरुणः—गोउळगदाओ इत्थिआओ तुए एव्व कुलटाओ । किदाओ—(छाया–गोकुलगतास्त्रियस्त्वयैव कुलटाः कृताः)

दामोदरः---(सस्मितं) किमेवं ?

तरुणः—(सक्रोधं) गच्छ तुह कज्जस्स। (कृष्णं नुदति) (छाया–गच्छ तव कार्याय)

चिन्तयन्ती--(सावेगं) हा, संतं पावं। (नेत्रं निमीलयति) (छाया–हा, शान्तं पापं)

दामोदरः---तर्हि, ताडय, (परिक्रामति)

वृद्धः--गच्छ ळे अब्भंतळं। (नुदति) (छाया–गच्छ रे अभ्यन्तरं)

(चिन्तयन्ती—दण्डवत्पतति)

तरुणः—(सावेगं) किण्णु खु, ण हि णिस्ससइ। (छाया–किंनु खलु न हि निश्वसिति)

वृद्धः—वच्छ, पेक्ख पेक्ख, दामोदळं अणुगच्छइ। (छाया-वत्स, पश्य, पश्य, दामोदरमनुगच्छति)

तरुणः---कहं एत्थ एव्व णिवडिदा वट्टइ। (दामोदळं अणुगच्छइ अ) (छाया-कथं, अत्रैव निपतिता वर्तते, दामोदरमनुगच्छति च)

वृद्धः—सच्चं, एदं कहं । (छाया-सत्यं एतत्कथम्)

तरुणः—अचरिअं खु एवं । (दामोदळदेहम्मि विळीणा ण दीसइ

चिन्तयन्त्याश्शरीरोपरि निपत्य रोदिति) (छाया-आश्चर्यं खल्वे-
तत्, दामोदरदेहे विलीना न दृश्यते)

वृद्धः—(गच्छन्तं कृष्णमवलोक्य) वच्छ, उट्ठेहि उट्ठेहि पेक्ख, दामोदळो चउब्भुओ दीसइ। (छाया-वत्स, उत्तिष्ठ, उत्तिष्ठ, पश्य, दामोदरश्चतुर्भुजो दृश्यते)

तरुणः—(उत्थाय) कहं ? चउब्भुओ। (छाया-कथं ? चतुर्भुजः) (उभावपि सरभसमुपसृत्य प्रणम्य-मरिसदु दमोदळो परुस-भासिणं इमं जणं (छाया-मृष्यतु दामोदरः परुषभाषिणमिमं जनं)

दामोदरः—क्व चिन्तयन्ती ?

तरुणः—(सगद्गदं) तुमं अणुगदा। (छाया-त्वामनुगता)

दामोदरः—कथं, मामनुगता ?

वृद्धः—तुह अणुग्गहस्स जं होदव्वं तं आसि। (छाया-तवानुग्रहस्य यद्भवितव्यं, तदासीत्)

दामोदरः—भवतु, भवतु, साधु संस्कुरुतं तस्या मङ्गलभाजनं शरीरं।

तौ—जं आणवेदि। (निष्कान्तौ) (छाया-यदाज्ञापयति)

(प्रविश्य) नीलाम्बरः—वत्स, दामोदर,

दामोदरः—अये ! आर्यः, (साञ्जलिबन्धं) क्व गतोसि !

नीलाम्बरः—मातुलनियोज्यस्समायातो रथेनाक्रूरः।

दामोदरः—अक्रूरः, किमर्थं ?

नीलाम्बरः—न जाने, क्व वासुदेवः, क्व वासुदेवः, इति पृच्छन्नागतः

दामोदरः क्वेदानीम् ?

नीलाम्बरः—अस्मद्गृहं प्रविष्टः।

दामोदरः—एहि, गच्छामः।

(निष्क्रान्ताः सर्वे)

(प्रवेशकः)



—

## (द्वितीयोऽङ्कः)

(ततः प्रविशति निजगृहारामस्था पुष्पापचयं नाटयन्ती राधा)

राधा—(कृष्णचरितबद्धं गीतं गायन्ती) ण रमणिज्जं एदं एदं खु रमणिज्जं ओचिणोमि। (तथा कृत्वा) किण्णु खु, मह पाणिफरिसं परिहरिअ एसो कसणभमरो अण्णदो गदो। (छाया—न रमणीयमेतत्, एतत्खलु रमणीयं, अपचिनोमि, किन्तु, खलु, मम पाणिस्पर्शं परिहृत्यैष कृष्णभ्रमरोऽन्यतो गतः)

(प्रविश्य) यमुना—हला, तुवर, तुवर। (छाया—हला, त्वरस्व त्वरस्व)

राधा—कुदो? (छाया—कुतः)

यमुना—किं, ण जाणासि? (छाया—किं न जानासि),

राधा—ण जाणामि, कहेहि। (छाया—न जानामि, कथय)

यमुना—दामोदलो मं उज्झिअ कहिं वि ण चलइ त्ति भणिदं खु तुए। (छाया—दामोदरो मामुज्झित्वा कुत्रापि न चलतीति भणितं खलु त्वया)

राधा—आम, दाणिं वि भणामि। (छाया—आम, इदानीमपि भणामि)

यमुना—सो विस्संभभाअणं ण हि वंचओ त्ति भणिदं खु मए। (छाया—स विस्रम्भभाजनं न हि, वञ्चक इति भणितं खलु मया)

राधा—किं दाणिं? (छाया—किमिदानीम्)

यमुना—ण किं वि अण्णं, सो पत्थिदो। (छाया—न किमप्यन्यत्, स प्रस्थितः)

राधा—कहिं? (छाया—कुत्र)

यमुना—महुरं। (छाया—मधुराम्)

राधा—कहं? (पुष्पभाजनं पातयति) (छाया—कथम्)

यमुना—किं एदं । (विकीर्णानि कुसुमान्यादाय भाजनं पूरयति) (छाया—किमेतत्)

राधा—हला, अवि सच्चं, केण भणिदं । (छाया—हला, अपि सत्यं केन भणितम्)

यमुना—किं आळिहं कहेमि, मए दिट्ठं, सव्वे वि इत्थिआजणो रहं पळिवळिअ चिट्ठइ । (छाया—किमलीकं कथयामि, मया दृष्टं, सर्वोऽपि स्त्रीजनो रथं परिवार्य तिष्ठति)

राधा—एहि दाव, (परिक्रम्य) कस्स रहो ? (छाया—एहि तावत्, कस्य रथः ?)

यमुना—कंसस्स । (छाया—कंसस्य)

राधा—कहं ? कंसस्स, केण आणीदो । (छाया—कथं कंसस्य, केनानीतः ?)

यमुना—अक्कूळेण । (छाया—अक्रूरेण)

(ततः प्रविशति नीलाम्बरद्वितीयो गोपीजनपरिवारिते रथे निषण्णो दामोदरः)

दामोदरः—मुञ्चत पन्थानम् ।

स्त्रीजनाः—दामोदळ, मा गच्छदु भवं । (सबाष्पमञ्जलिं बध्नन्ति) (छाया—दामोदर, मा गच्छतु भवान्)

राधा—(ससम्भ्रममुपसृत्य) णाह, किण्णु खु एदं । (छाया—नाथ, किन्नु खल्वेतत्)

दामोदरः—(बलरामस्य मुखमवलोक्य स्मयते)

नीलाम्बरः—अम्ब, प्रस्थितस्ते नाथो मधुराम् ।

राधा—(संस्कृतमाश्रित्य) नाथ, किमिदं, किमु दूरीकृतो व्याहारोऽपि ।

दामोदरः—(सस्मितं मुरलीं चुम्बन्नास्ते)

राधा—(सगद्गदं) कृष्ण, नाहं मुरली। (चक्रारमारुह्य मुरलीमाच्छिद्य गृह्णाति)

अक्रूरः—दामोदर, किमिदं अतिक्रान्तो हि कालः।

दामोदरः—प्रेरय वाहान्।

अक्रूरः—(तथा करोति)

राधा—(खलीनं गृहीत्वा) केन कृतं ते नामधेयं "अक्रूर" इति।

(प्रविश्य) वनमाला—णाह, मए सव्वहा अवलिचत्तकंठग्गहाए होदव्वं खु। (छाया–नाथ, मया सर्वथाऽपरित्यक्तकंठग्रहया भवितव्यं खलु,)

राधा—अनवरतमप्याविरहिता वर्तते किल वनमाला, (सबाष्पगद्गदं) न हि राधा।

वनमाला—दामोदल, गेह्ण णोणीदं, संतोसेण समप्पेमि, मागच्छ महुरं। (छाया–दामोदर, गृहाण नवनीतं सन्तोषेण समर्पयामि, मा गच्छ मधुराम्)

यमुना—णाह, मा खु दाणिं तुह जमुणा ? (छाया–नाथ, मा खलु इदानीं यमुना)

राधा—हन्त, प्रलोभनं, प्रलोभनम्।

अक्रूरः—(सर्वा अपि बलात्किञ्चिदुत्सार्य वाहान्प्रेरयति)

राधा—(रथजिघृक्षया कतिचित्पदानि गत्वा मूर्छिता पतति)

गोप्यः—णाह, पीदंबल, दामोदल, किमु जुत्तं एव्वं कदुअ गमणं। (छाया–नाथ, पीताम्बर, दामोदर, किमु युक्तमेवं कृत्वा गमनं।)

दामोदरः—अक्रूर स्थापय रथं, समाश्वास्य यामः।

अक्रूरः—(तथा करोति)

दामोदरः—(रथादवरुह्य प्रतिनिवृत्य) राधे समाश्वसिहि ।

राधा—हन्त, प्रलोभनं, प्रलोभनम् ।

दामोदरः—(पाणिना परामृशति)

राधा—कथं, परिचित इव स्पर्शः (नेत्रमुन्मील्य) किन्तु खलु, स कृष्णः, दिष्ट्या, हन्त। (सहसोत्थाय) हला, यमुने आनय पुष्पभाजनम् ।

यमुना—(आनयति)

राधा—(अञ्जलिना कुसुममादाय कृष्णोपरि वर्षति)

दामोदरः—अलं वैक्लव्येन, पुनरागतमवेहि ।

राधा—हन्त भोः स एव सङ्कल्पः ।

दामोदरः—आम, राजाज्ञा खलु ।

राधा—(सगद्गदं) नैव स्मरति पक्कणजनं नागरिकः हन्त, ते प्रलोभन शीलता, कृष्ण, एतदर्थं किल प्रयाणोन्मुखप्राणां मां प्रतिबोधितवान् ।

दामोदरः—(सर्वा विलोक्य) अलं वैक्लव्येन, प्रार्थये गमनानुमतिम् ।

गोप्यः—दामोदल, तुए विरहिदे गोउळे कहं विअ वसामो ।
(छाया—दामोदर, त्वया विरहिते गोकुले कथमिव वसामः)

दामोदरः—मामिहस्थमवगच्छत । (रथमधिरोहति)

गोप्यः—(सनिर्वेदं निष्क्रान्ताः)

अक्रूरः—(वाहान्प्रेरयति)

नीलाम्बरः—अनिर्वचनीयं खलु मकरन्दस्य दुःखम् ।

अक्रूरः—गोपानां पुनः ।

दामोदरः—किं कुर्मः ?

नीलाम्बरः—अक्रूर,

प्रथूच्छूनककुत्स्फीतग्रीवो रोषारुणेक्षणः ।

प्रांशुस्तीक्ष्णविषाणोऽत्र हतोऽरिष्टोऽनुजन्मना ॥ १ ॥

अक्रूरः—(साञ्जलिबन्धम्) मधुरावासिनापि मया श्रुतमेवाद्भुतपरितस्य चरितम् ।

दामोदरः—वाजिनः प्रजविनः कुरु ।

अक्रूरः—(तथा करोति)

नीलाम्बरः—

श्वासोच्छ्वासांश्च नभ्रभवटतलगतं स्यन्दनं स्वात्मलीनं
कुर्वन्पर्यन्तदेशं वलयवदधिकं भ्रामयन्पल्वलानि ।
अग्रेमार्गं प्रसन्वा ह्रिमगलितमपि स्पष्टयन्दूरसंस्थं
दूरीकुर्वंश्च तन्द्रां मनसि वितनुते विस्मयं वेग एषः ॥ २ ॥

दामोदरः—एवमेवेदं प्रथमानुभवेन ।

नीलाम्बरः—

वातचालितपताकिकावलिः
शातकुम्भकलशातिशोभिता ।
शीतरश्मिविमलालयाकुला
भाति कास्विदियमायता पुरी ॥ ३ ॥

अक्रूरः—इयमेव मधुरा ।

दामोदरः—कथं, मधुरा ?

अक्रूरः—अथ किं ।

दामोदरः—स्थापय रथम् ।

अक्रूरः—कुतः ?

दामोदरः—पदाती प्रविशावः

अक्रूरः—यथारोचते भवते । (रथं स्थापयति)

दामोदरः—प्रथममावेदय मातुलाय समायातावावाम् ।

अक्रूरः—तथा । (रथेन निष्क्रान्तः) (उभौ—परिक्रामतः)

नीलाम्बरः—अहो, रमणीयेयं मधुराया रथ्या ।

दामोदरः—अभ्रंलिहशिखराणि निकेतनानि ।

नीलाम्बरः—(नेपथ्याभिमुखमवलोक्य)—

आतपातिमसृणासिताङ्गकः
श्मश्रुजालपिहिताधरोऽसलः ।
अंसयुग्मदृढबद्धपाण्डर
ग्रन्थिभारनतपृष्ठ एष कः ॥ ४ ॥

दामोदरः—पृच्छामः । (परिक्रामति)

(ततः प्रविशति यथानिर्दिष्टो रजकः)

रजकः—अदिक्कंतो काळो, ता तुरिअं गच्छामि । (छाया—अतिक्रान्तः कालः, तस्मात्त्वरितं गच्छामि)

दामोदरः—(उपसृत्य) भोः, कस्त्वम् ?

रजकः—(सामर्षं) ळे ळोअप्पसिद्धं मं को तुमं त्ति पुच्छसि । (छाया—रे लोकप्रसिद्धं मां कस्त्वमिति पृच्छसि)

दामोदरः—अलममर्षेण, नूतनोऽहमत्र ।

रजकः—गच्छ ळे, किं तुह मह्य उत्तंतेण ? (छाया—गच्छ रे, किं तव मम वृत्तान्तेन)

दामोदरः—विक्रेयमिदम् ?

रजकः—ळे, किं एव्वं पुच्छसि, महळाअस्स ळजओहं । (छाया—रे किमेवं पृच्छसि, महाराजस्य रजकोऽहम्)

दामोदरः—किमु रजकः, महाराजः कः ?

रजकः—किं तुमं उम्मत्तो ? (छाया—किं त्वमुन्मत्तः)

दामोदरः—महाराजं ज्ञातुमिच्छामि ।

रजकः—हुं, बाळो तुमं । (गन्तुमिच्छति) (छाया—हुं बालस्त्वम्)

दामोदरः—(अर्गलीभूय) अत एव पृच्छामि महाराजः कः,

रजकः—ळे, जो महाळाओ सो एळ, (छाया-रे, यो महाराजस्स एव)

नीलाम्बरः—तन्नाम,

दामोदरः—(सस्मितं) कथयति कथयति,

रजकः—(सक्रोधभ्रूभङ्गं) ळे मुंच मग्गं, (नुदति)—(छाया-रे मुञ्च मार्गम्)

दामोदरः—(अर्गलीभूय) कथय, कथय,

रजकः—ळे बाळो वि कसणो विअ परक्कमासि (सस्मितं) वच्छ मुञ्च मग्गं अदिक्कंतो काळो, (छाया—रे बालोऽपि कृष्ण इव पराक्रमसि, वत्स, मुञ्च मार्गं, अतिक्रान्तः कालः)

नीलाम्बरः—कृष्णः कः,

रजकः—किण्णु खु, ण जाणासि कसणं (छाया-किन्तु खलु, न जानासि कृष्णम्)

नीलाम्बरः—न जानामि,

रजकः—गोउळे वट्टइ, देण डिभत्तणम्मि माळिदा पूदणा, (छाया-गोकुले वर्तते, तेन डिम्भत्वे मारिता पूतना)

दामोदरः—कथं पूतना,

रजकः—सअडासुळो वि, (छाया-शकटासुरोऽपि)

दामोदरः—हन्त?

रजकः—दावमेत्तं ण हि, त्तिणवत्तो केसी, अळिट्ठो, धेणुओ अण्णो वि जो को, (छाया-तावन्मात्रं न हि, तृणावर्तः, केशी अरिष्टः, धेनुकः, अन्योऽपि यः कः)

दामोदरः—महदिदमाश्चर्यम्।

रजकः—तस्स जेट्टभादा नीळंबळो वि परक्कमे कसणं सणुकुणइ, (छाया—तस्य ज्येष्ठभ्राता नीलाम्बरोऽपि पराक्रमे कृष्णमनुकरोति)

दामोदरः—तस्य भ्रातापि ?

रजकः—आम, तस्स मादुळेण अह्माणं महाळाएण घणूमहस वच्छळेण आणअि ताणं दोह्णं अ माळणकए चाणूळमुट्टिओ आदिट्ठाओ, (छाया—आम्, तस्य मातुलेनास्माकं महाराजेन धनुर्महोत्सवच्छलेनानीय तयोर्द्वयोश्च मारणकृते चाणूरमुष्टिकौ आदिष्टौ)

दामोदरः—किमिदानीमायाति ?

रजकः—अहइं अणेदुं अक्कूळो प्पासिदो, (छाया—अथकिं, आनेतुमक्रूरः प्रेषितः)

दामोदरः—किमस्माकमप्यस्ति प्रवेशः ?

रजकः—अहइं, ताणं णिजुद्धकए एक्को सहामंडवो काळिदो हंत-आदक्कंतो काळो, महूसवणिमित्तं महाळाअस्स समप्पणिज्जं अमुव्वळं एदं ंसुअं, (छाया—अथकिं, तयोर्नियुद्धकृते एकसभामण्डपः कारितः, हन्त, अतिक्रान्तः कालः महोत्सवनिमित्तं महाराजाय समर्पणीयममूल्यमेतदंशुकम् )

दामोदरः—तह्यावयोरप्यनुरूपं प्रदेह्यंशुकं सभाप्रवेशाय,

रजकः—(सामर्ष) ळे पुणो वि एळं मा भण, अणुरूवं फळं अणुहविस्ससि, (छाया—रे पुनरपि एवं मा भण, अनुरूपं फलमनुभविष्यसि)

दामोदरः—भवतु, भवतु, देहि तावत् ,

रजकः—मुंच ळे मग्गं, (कृष्णं परिनुदति) (छाया—मुञ्च रे मार्गं)

(नीलाम्बरः—सस्मितं वस्त्रभारमधः पातयति)

रजकः—ळे, मं ण जाणासि, (चपोटिकां ददाति) छाया—रे मां न जानासि)

दामोदरः—जानामि त्वाम् । (मुष्ट्या वक्षसि प्रहरति)

(रजकः—गतप्राणः पतति) (उभौ—स्वानुगुणमंशुकमादायात्मानमलङ्कृत्य परिक्रामतः)

नीलाम्बरः—

क्रमेलकशिरुका खुरणसा नमज्जत्रुका
मलाविलचलद्रदा प्रसृतपार्श्वकोच्चावटुः ।
अरालकरभा चलत्पृथुलभुग्नगुल्फाञ्चला ।
पतद्गूहकरा नता चरति कास्विदेषा पथि ॥ ५ ॥

दामोदरः—पृच्छामस्तावदेनामपि । (परिक्रामति)

(ततः प्रविशति यथानिर्दिष्टा कुब्जा)

कुब्जा—तुरिअं गन्दव्वं किं करिस्सं ण प्पच्चळइ अंग्घी ।
(छाया—त्वरितं गन्तव्यं किं करिष्यामि, न प्रचलत्यङ्घ्रिः ।)
(दामोदरः—उपसृत्य हसति)

कुब्जा—वच्छ, कुदो हससि । (छाया—वत्स, कुतो हससि )

दामोदरः—मनोहराङ्गीति ।

कुब्जा—ण हि किं हं रमणिज्जा । (छाया—न हि किमहं रमणीया ?)

दामोदरः—उक्तं हि । त्वां ज्ञातुमिच्छामि ।

कुब्जा—(सस्मितं) किं एदं वि भणिदव्वं, इद्धिआ खु हं ।
(छाया—किमेतदपि भणितव्यं, स्त्री खल्वहम् ।)

दामोदरः—ज्ञातमिदानीम् ।

नीलाम्बरः—तव नामधेयम् ।

कुब्जा—मह सरीरं एव्व भणादि । (छाया—मम शरीरमेव भणति ।

दामोदरः—भवतु, नर्मज्ञासि, त्वरितगामिनी क्व प्रस्थिता ?

कुब्जा—किं तुमं एव्व तुरिअगमणो, पेक्खह्म । मए सह धावदु दाव भवं । (छाया—किं त्वमेव त्वरितगमनः ? पश्यामः । मया सह धावतु तावद्भवान् ।)

दामोदरः—(बद्धपरिकरः) प्रधावतु भवती ।

कुब्जा—(तुमं वि । (छाया—त्वमपि ।)

दामोदरः—भवतु । (सज्जस्तिष्ठति)

कुब्जा—(क्रमेलकवत्परिधाव्य परावृत्य) वंचओ सि (छाया वञ्चकोऽसि ।)

दामोदरः—(सस्मितं) नाहं समर्थः ।

नीलाम्बरः—अहं धावामि, प्रधावतु भवती । (सज्जस्तिष्ठति)

कुब्जा—मा खु मा खु । (छाया—मा खलु मा खलु ।)

दामोदरः—(उपसृत्य) क्व प्रस्थिता ?

कुब्जा—वट्टइ खु । (स्वोदरं परामृशति) (छाया—वर्तते खलु)

दामोदरः—न हि ते प्रियः ?

कुब्जा—वट्टइ, सो मह प्पिओ, हं उण तस्स अप्पिआ जादा । (छाया—वर्तते, स मम प्रियः । अहं पुनस्तस्याप्रिया जाता ।)

दामोदरः—कुतः ?

कुब्जा—हं अरमणिज्जा त्ति परिच्चत्ता । (छाया—अहमरमणीयेति परित्यक्ता ।)

नीलाम्बरः—स तु सुन्दरो भवेत् ?

कुब्जा--अहइं सुणोदु—

बळिळो तुंदी खुज्जो

जळसिच्चंगालवण्णओ विग्गो ।

बहिलो मुण्डो खोडो

वट्टइ मह वळ्ळहो दूहे ॥ ६ ॥

(छाया--अथकिं शृणोतु—वलिरस्तुन्दी कुब्जो जलसिक्ताङ्गारवर्णको विग्रः । बधिरो मुण्डः, खोडो वर्तते मम वल्लभो दूरे ।)

दामोदरः—दिष्ट्या सङ्घटनमिदम् ।

कुब्जा--देण पळिच्चत्ता उअळकए महाळाअस्स घुसिणकम्मं कुणन्ती वट्टामि, को तुमं ? (छाया--तेन परित्यक्ता उदरकृते महाराजस्य घुसृणकर्म कुर्वती वर्ते । कस्त्वम् ?

दामोदरः—कथं जानासि ?

कुब्जा--पुरिसोत्तमं जाणामि । (छाया--पुरुषोत्तमं जानामि ।)

दामोदरः—बालोऽहम् ।

कुब्जा—होदु, होदु, वामणो को ? (छाया--भवतु, भवतु, वामनः कः ?

दामोदरः—स तु पुरुषोत्तमः ।

कुब्जा—तुमं वि ।। (छाया--त्वमपि ।)

दामोदरः—तर्हि ममापि याच्ञाधिकारः ।

कुब्जा—हं इद्धिआ जण्णाहिआरो ण हि, किं जाचसि ? (छाया--अहं स्त्री, यज्ञाधिकारो न हि, किं याचसे ?

दामोदरः—त्वयि यदस्ति ।

कुब्जा—घुसिणं अत्थि (छाया--घुसृणमस्ति ।)

दामोदरः—देहि तदेव ।

कुब्जा—मं वि बळिं विअ पादाळं णेसि किं? (छाया—मामपि बलिमिव पातालं नयसि किम्?

दामोदरः—त्वामुद्धरामि ।

कुब्जा—ता गेह्न । (ददाति) (छाया—तर्हि गृहाण ।)

दामोदरः—(बलरामायार्पयित्वात्मानमलङ्कृत्य) कथमस्ति!

कुब्जा—कामजणओ विअ दिट्ठिजुअळेण णाळं तुमं दट्ठुं मं उद्धळ । (छाया—कामजनक इव, दृष्टियुगलेन नालं त्वां द्रष्टुं, मामुद्धर ।) (दामोदरः—तथा करोति ।)

कुब्जा—(संस्कृतमाश्रित्य)—

सौन्दर्यं सौकुमार्यञ्च लावण्यं प्रांशुतात्मनः ।
हन्त दिष्ट्या मया नाथ स्वप्नेप्येवं न चिन्तितम् ॥ ७ ॥

(सविभ्रमं) अस्मद्गृहमलङ्करोतु स्वामी, धन्या भवेयम् ।

दामोदरः—(सस्मितं) भवतु प्रकृतकार्यानन्तरम् ।

सुन्दरी—इतोऽपि प्रकृतकार्यं किम्?

दामोदरः—महाराजस्य धनुर्महोत्सवः ।

सुन्दरी—स तु वञ्चनाव्यापारैकतानः । जागरूकेण भवता भवितव्यम् ।

दामोदरः—स्यान्नाम । पश्यामः । गच्छतु भवती ।

सुन्दरी—मङ्गलं ते भूयात् । (सविभ्रमं निष्क्रान्ता)

दामोदरः—(नेपथ्याभिमुखमवलोक्य) आर्य, अयं मालाकारः, पश्यत्वार्यः—

पुष्पादानं भाजनाद्वृन्तसूत्र-
ग्रन्थ्याघानं कश्च शक्नोति वेत्तुम् ।

शश्वत्पाणिर्नृत्यतीवास्य चित्रं
रम्यं माल्यं दृश्यते माययेव॥ ८ ॥

अस्मद्भक्ताग्रेसरोऽयं, आर्य, विनोदेन कञ्चित्कालमतिवाहयामः।

नीलाम्बरः—यथा रोचते भवते।

दामोदरः—अद्य वृद्धेभ्यभूमिकां परिगृह्य माल्यक्रीणनाय प्रविशत्वार्यः।

नीलाम्बरः—कथं भवान्?

दामोदरः—अहं तु प्रविशामि कसदूतभूमिकया (उभौ–तथाभूत्वा परिक्रामतः।)

(ततः प्रविशति यथानिर्दिष्टो मालाकारः।)

मालाकारः—इतस्तावत्।

प्रविश्य भार्या–आणवेदु (छाया–आज्ञापयतु।)

मालाकारः—अपि सज्जं?

भार्या—अहइं गोमएण सोहिदं क्खिदिदळं, णाअवळ्ळीए अळंकिदं अ (छाया–अथकिं गोमयेन शोधितं क्षितितलं नागवल्या अलङ्कृतञ्च।)

मालाकारः—दीपिकास्तम्भद्वयं पुनः?

भार्या—भद्दासणस्स पुळदो णिक्खित्तं हेअङ्गवीणेण पूळिदं अ।
(छाया–भद्रासनस्य पुरतो निक्षिप्तं हैयङ्गवीनेन पूरितञ्च।)

मालाकारः—गृहाण, अलङ्कुरु भद्रासनम्। (पुष्पमालास्समर्पयति।)
(भार्या–आदाय निष्कान्ता।)

मालाकारः—सन्निहितेव भगवदागमनवेळा, धन्यो भवेयम्।

धनी—(उपसृत्य) कियदस्य?

मालाकारः—अमूल्यमेतत्।

धनी—तर्हि, तूष्णीं दीयते ?

मालाकारः—न हि, न हि,

धनी—दीयतां मूल्याय।

मालाकारः—अद्य नापि विक्रीयते।

धनी—कुतः ?

मालाकारः—आयाति भगवान्।

धनी—भगवान्कः ?

मालाकारः—वासुदेवः।

धनी—आयातु नाम।

मालाकारः—सर्वमिदं तस्मै।

धनी—सन्ति किल बहूनि माल्यानि।

मालाकारः—उक्तं हि सर्वमपीति।

धनी—दीयतामेकं, दास्यामि द्विगुणतरं मूल्यम्।

मालाकारः—(सस्मितं) पुरस्स्थापितेऽपि मेरौ न दास्यामि दल-मेकमपि।

धनी—मयापि भगवते नीयते।

मालाकारः—(साञ्जलिबन्धं) गन्तुमर्हति भवान्।

कंसदूतः—(उपसृत्य) किमिदम् ?

मालाकारः—न किमपि।

दूतः—(सरोषं) न किमपि, राज्ञा तावद्भवदागमनं प्रतिपालनी-यम्।

मालाकारः—राजा कः ?

दूतः—उन्मत्तस्संवृत्तोऽसि।

मालाकारः—(सास्मितं) तथैव भवतु।

दूतः—किन्तु खलु भवतु तथैव, दण्ड्योऽसि।
मालाकारः—पश्यामः को वेति।
दूतः—गच्छ रे माल्यमादाय प्रासादम्।
मालाकारः—अस्मद्गृहमेव प्रासादः।
दूतः—हन्त, भवद्गृहं प्रासादः?
मालाकारः—अथ किं वासुदेवस्येदम्।
दूतः—अङ्ग मुधा जहासि जीविकाम्।
मालाकारः—(सस्मितं) हुं तृणीकृतजीवितस्य मे किं तया?
दूतः—इमानि तावत्कस्मै?
मालाकारः—भगवते वासुदेवाय।
दूतः—हन्त वध्याय सत्कारः।
मालाकारः—(सबाष्पगद्गदं) शान्तंपापं, शान्तंपापम्।
(प्रविश्य) पुत्रः—तात, तौ नायातौ, शून्येन रथेनाक्रूरः प्रविष्टः सौधम्।
मालाकारः—(सावेगं) पाप, अस्मन्मनोरथेनेति ब्रूहि (सनिर्वेदं) अपि सत्यं सम्यगवलोकितम्।
पुत्रः—किमलीकं कथयेयम्?
मालाकारः—न पृष्टः किमक्रूरः?
पुत्रः—न हि।
मालाकारः—(दीर्घं निश्वस्य) हुं न हि, न हि।
दूतः—स तु महाराजभीत्या तत्रैव भवेत्।
मालाकारः—कथं, महाराजाद्भीतिः स तु भयापहो हि।
दूतः—उत्तिष्ठ, आयाहि, समर्पय राज्ञे।
मालाकारः—हन्त महाराजाद्भीतिः नाथ, आश्रितानामभयाय खलु भवदवतारः।

दूतः—किमु न श्रुतम् ।

मालाकारः—तात किमुक्तम् ?

दूतः—उत्तिष्ठ आयाहि समर्पय राज्ञे ।

मालाकारः—मास्तु, मास्तु, भगवते सङ्कल्पितम् ।

दूतः—अरे स तु दूरे ।

मालाकारः—भक्त्या मनसैव समर्पयामि अङ्गीकरोति भगवान् अलङ्कारप्रियो हि ।

धनी—स तु नागतः देहि माल्यमेकम् ।

मालाकारः—कथं नागतः? (सबाष्पगद्गदं) भगवन् भक्तवत्सलो हि भवान् । क्व लीनमिदानीं तद्वात्सल्यम् ।

गजेन्द्रो ग्राहार्तः कमलमपचित्योद्धृतकरः
नितान्तं तान्तात्मा सरसि निजयत्नं शिथिलयन् ।
गृहाणेदं स्वामिन्निति चिरमरोदीत्करुणया
तदादातुं दूरान्न किमु गरुडेन त्वमगमः ॥ ९ ॥

अहमपि भवग्राहार्तः चिराद्रोदिमि, आयाहि, माल्यमिदमङ्गीकुरु, (सनिर्वेदं) हुं, कथं पापीयांसमुपगच्छति ? (सबाष्पं) नूनं नूनं, पापीयानहं, किन्तु खलु पापापहो हि भगवान् आयाति, अनुगृह्णाति मां, (सोन्मादहासं) एह्येहि, कथमौदास्यं ? नोचितमिदम्, नाथ क्व गतं कारुण्यम् ? अहमेव खलु पात्रं तव कारुण्यस्य । (समन्तादवलोक्य सवैलक्ष्यं) किन्तु खलु न हि दृश्येते ?

(ससम्भ्रमं प्रविश्य) भार्या—अज्ज तुवर तुवर (छाया-आर्य त्वरस्व त्वरस्व)

मालाकारः—कुतः ?

भार्या—पुप्फासणे वासुदेवो बलदेवोऽवि (छाया-पुष्पासने वासुदेवो बलदेवोऽपि ।)

मालाकारः—कथं, वासुदेवः ? अस्मत्स्वामी वासुदेवः, बलभद्रोऽपि भगवदग्रजः, हन्त, भद्रमस्तु भद्रमस्तु । (सहसोत्प्लुत्य परिक्रामति ।)

(ततः प्रविशतः पुष्पासनोपविष्टौ नीलाम्बरपीताम्बरौ ।)

पीताम्बरः—(समन्दस्मितं) आर्य कथं वर्तते मालाकारः ।

नीलाम्बरः—किं कथयेयम्,

मालाकारः—(सरभसमुपसृत्य) देवदेव, (प्रणम्योत्थाय साञ्जलिबन्धं)

भगवानयं हि वसुदेवसम्भवो
भवसागरान्तरसक्तजनेर्मम ।
भवनं कृपैकवसतिस्समेयिवा-
नहमेव हन्त सुकृती शरीरिणाम् ॥ ९ ॥

(नृत्यति)

भार्या—समप्पेदु अज्जो माळं । (छाया—समर्पयत्वार्यो मालाम् ।)

मालाकारः—इदमहं समर्पयामि । (मालामादाय) भगवन् भक्तवत्सल, अवाप्तसमस्तकामो हि भवान् ।

दामोदरः—अमूल्यं किल माल्यमिदं, देहि देहि तावत् ।

मालाकारः—(उभावपि माल्यैरलङ्कृत्य) हन्त भोः, मया समर्पितमप्यङ्गीकृतं भगवता । धन्योऽस्मि । धन्योऽस्मि (सप्रदक्षिणं प्रणम्योत्थाय) वत्स, विस्तारय लोचने, सहधर्मचारिणि, विस्तारय लोचने,—

अनेकपरिवत्सरं नियमतस्तपश्चर्यया
सुधीरपि विलोकयेन्नवपयोदमेनं न वा ।

कृपामृतभरात्स्वयं सविधमागतं सादरं
विलोकय विलोकयामृतरसप्रदानोन्मुखम् ॥ १० ॥

(सभक्ति निर्वर्ण्य) हन्त भोः, शेषशायी चतुर्भुजो भगवा-न्पुण्डरीकाक्षः,। नमोस्तु ते हन्त मास्तु अस्माकं दृष्टिदोषः। भद्रमस्तु ते। (साञ्जलिबन्धं तिष्ठति।)

दामोदरः—तात, सन्तुष्टोस्मि ते भक्त्या।

मालाकारः—कृतकृत्योस्मि।

दामोदरः—दातुमिच्छामि, यदभिमतं ते।

मालाकारः—भगवन्, अखिलमपि भवदीयं खलु।

दामोदरः—अहो, ते निस्पृहता। दत्तमस्मत्पदम्।

मालाकारः—(सहर्षगद्गदं) कथं मुक्तोऽहम्?

दामोदरः—न केवलं भवान् भवद्वंश्या अपि।

मालाकारः—कथं तेऽपि मुक्ताः? (पुत्रमालिङ्ग्य) वत्स मुक्तोऽसि, प्रिये मुक्तासि, (सोन्मादहासं) हन्त, सर्वे मुक्ताः (निजोद्गमनीयमुत्पात्य नृत्यति।)

दामोदरः—किं ते भूयः प्रियमुपहरामि?

मालाकारः—नाथ, भवत्पादारविन्ददास्यादपि किमस्ति प्रियमन्यत्? तथापीदमस्तु।

(भरतवाक्यं)

भूपालाः परिपालयन्तु भुवनं न्याय्येन सम्यक्पथा
स्याद्गोब्राह्मणमण्डलाय कुशलं लोकोऽस्तु नित्यं सुखी।
कासारा रसपूरिता विटपिनः पुष्पैः फलैस्सम्भृताः
सस्याढ्या धरणिश्च सन्तु समये वर्षन्तु धाराधराः ॥ ११ ॥

(निष्क्रान्तास्सर्वे)

(द्वितीयोऽङ्कः)

इति श्रीबालधन्वि जग्गूवकुलभूषण कविविरचितं अमूल्यमाल्यं सम्पूर्णम्।



शुभमस्तु